तस्या उत्तमं पदं दशमेऽहन्यभ्यस्येयुः* ॥ ११ ॥

तस्या ऋचः दशमेऽहनि माचिके उत्तमं पदं अभ्यस्येयुः पुनर्ब्रूयुः अनुष्टुप्पारोचार्थम् अथ तस्या इति किमर्थं प्रकृतैव सा उच्यते दशमेऽहनि तार्त्तीयसवनिके दधिभचे तस्या ऋचः उत्तमाभ्यासः स्यात् हेतुसमत्वात् तस्माद्भदिति ॥ ११ ॥

पूर्वेण पत्नीशालामन्तरेणाग्नीध्रीयं सदश्च दक्षिणा नयेयुस्तीर्थेन* ॥ १२ ॥

पूर्वेण पत्नीशालां गमयित्वा आग्नीध्रीयसदसोरन्तरेण दक्षिणा नयेयुः आप्रानेन तीर्थेन ॥ १२ ॥

सर्वासान्देवस्य त्वेति पुरस्ताज्जपः* ॥ १३ ॥

सर्वासां दक्षिणानां देवस्य त्वेत्येतदादि मन्त्रः पुरस्ताज्जपः स्यात् ननु सर्वासामिति किमर्थं दक्षिणानामिति बहुवचनात् सिद्धेः उच्यते, उक्तं पूर्वेण पत्नीशालामन्तरेणाग्नीध्रीयं सदश्च दक्षिणा नयेयुस्तीर्थेनेति, अनुच्यमाने एतस्मिन्ननेन दक्षिणापथेन नयनं यासां तासामेवैष पुरस्तात् स्यात् नान्यासामिति तस्माद्भदित्यत आरभ्यते सर्वासामिति कथं यास्तु न नीयन्ते सर्वासामेव पुरस्ताज्जपः स्यादिति

---

* आश्वलायनोऽप्येवम्।

यथा निमित्तं धान्यपक्षम् उदीचीमुद्राचे मुख्येभ्यो ग्रामवरान्दर-तोत्येतदादि ॥ १३ ॥

वरुणस्त्वेति यथादेवतं प्रतिगृह्णीयात्* ॥ १४ ॥

वरुणस्त्वेत्येतदादि यजुर्जपित्वा यथादेवतं प्रतिगृह्णीयात् यथा दक्षिणाया देवतां नाम्नोद्दिश्य यथा वरुणायाश्वमिति ॥ १४ ॥

यथाजाति मृगान्* ॥ १५ ॥

प्रतिगृह्णीयादिति वर्त्तते या यस्य जातिस्तामादिश्य यथावयवे मृगमिति ॥ १५ ॥

अप्राणश्च † ॥ १६ ॥

अप्राणञ्च यद्द्रव्यं यच्च यथाजाति प्रतिगृह्णीयात् न प्राणिति तदप्राणम् अनिन्द्रियमित्यर्थः ॥ १६ ॥

पुंवन्मिथुनान्यन्यत्राजाभ्यः* ॥ १७ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणे विशेषोऽस्ति ।

पुंवन्मिथुनानि प्रतीयात् यथा अश्वश्चाश्वी चाश्वौ पुरुषश्च पुरुषी च पुरुषौ अन्यथाजाभ्यः अजांस्तु मिथुनधर्मेण न प्रतिगृह्णीयात् नानादेवतात्वात् अन्यैवाजाया देवता अन्यैवाजस्य अग्नयेऽजम् अग्नीषोमाभ्यामजामिति ॥ १७ ॥

तेन क इदमित्युपरिष्टाज्जपः* ॥ १८ ॥

सावित्रादेर्दक्षिणाप्रतिग्रहमन्त्रस्य तेनामृतत्वमश्रीय क इदं कस्मा अदादित्युपरिष्टाज्जपः ॥ १८ ॥

तत्रोहापादीनि त्वा देवि दक्षिणेऽद इति च यत् तत् स्यात् तेन दात्र इदमाविशैतत्त इति च भुञ्जतीति च भूयासिंऽसीरिति च† ॥ १९ ॥

तत्र तस्मिन् दक्षिणाप्रतिग्रहणे ऊहापादीनि ऊहमापद्यन्ते ऊहापादीनि ऊहितव्यं व्यक्तिवचनैः का व्यक्तिः स्त्रीपुंनपुंसकादिवचनमेकत्वद्वित्वबहुत्वानि ननु अधिकृते मन्त्रे तत्रेति किमर्थम् उच्यते, ऊहनित्यतादर्शनार्थं तत्र तस्मिन् मन्त्रे सति ऊहमेतान्यापद्यन्ते त्वां देवि दक्षिणे अद इति च यत् तत् स्यात् तेन दात्रे

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

इदं आविश एतत्ते इति च भुञ्जतीति च भूयात् हिंसीरिति च ऊहो वक्ष्यते देवस्य त्वा देवस्य वां देवस्य वः, वरुणस्त्वा नयतु देवि दक्षिणे, वरुणो वां नयतु देव्यौ दक्षिणे वरुणो वो नयतु देव्यो दक्षिणः वरुणायाश्वं वरुणायाश्वौ वरुणायाश्वान् वरुणायाश्वे वरुणायाश्वः, तेनामृतत्वमशीय ताभ्याममृतत्वमशीय तैरमृतत्वमशीय तयामृतत्वमशीय ताभ्याममृतत्वमशीय ताभिरमृतत्वमशीय, वयः-शब्दस्य भूयाच्छब्देन सह सामानाधिकरण्यं तच्चाप्ययं ऊहपदेषु न परिसंख्यातः तथाप्यूहयितव्यः भूयाच्छब्देन सामानाधिकरण्यात् वयोदात्रे भूयात् वयसी दात्रे भूयास्तां वयांसि दात्रे भूयासुः वयोदातृभ्यां भूयात् वयसी दातृभ्यां भूयास्तां वयांसि दातृभ्यां भूयासुः वयोदातृभ्यो भूयात् वयसी दातृभ्यो भूयास्तां वयांसि दातृभ्यो भूयासुः, क इदं कस्मा अदात् क इमे कस्मा अदात् क इमानि कस्मा अदात् क इमं कस्मा अदात् क इमौ कस्मा अदात् क इमान् कस्मा अदात् क इमां कस्मा अदात् क इमे कस्मा अदात् क इमाः कस्मा अदात्, समुद्रमाविशेत् समुद्रमाविशेतां समुद्रमाविशन् द्विवचनबहुवचनयोर्लङ् आदेशात् सूत्रविधानात्, कामैतत्ते कामैते ते कामैतानि ते कामैष ते कामैतौ ते कामैते ते कामैषा ते कामैते ते कामैतास्ते, कामाय भुञ्जती भुञ्जत्यौ भुञ्जत्यः मा मा हिंसीः मा मा हिंसिष्टम् मा मा हिंसिष्ट ॥ १८ ॥

अश्वरथश्चेद्दद्यात् पूर्वेणाग्नीध्रीयमवस्थाप्य पुरस्ताज्जपं जपित्वा दर्भमुष्टिनाश्वमुखानि संमृज्याद् द्वाभ्यां द्वाभ्यामश्व-

नामभ्यामेकैकस्याश्वोऽसीत्येतत्प्रभृतिभिरुदक्षऽस्थमिति धानञ्जय्यः* ॥ २० ॥

वयस्वरथं दद्याद् यजमानः तमश्वरथमुद्गाता आग्नीध्रीयस्य पूर्वप्रदेशे समीपे स्थापयित्वा पुरस्ताज्जपञ्जपित्वा पुरस्ताज्जप उक्तः देवस्य त्वेति दर्भमुष्टिनाश्वमुखानां संमार्जनं कुर्यात् द्वाभ्यां द्वाभ्यामश्व-नामभ्यां एकैकस्याश्वस्य अश्वोऽसीत्येतत्प्रभृतिभिरश्वनामभिः उद-क्संस्थत्वविशेषक्रमम् एवं धानञ्जय्य आचार्य आह ॥ २० ॥

धुर्यौ प्रथममित्यपरम् † ॥ २१ ॥

धुरि युक्तौ धुर्यौ अश्वौ तौ प्रथमं संस्कुर्यादित्यपरं विधानम् ॥२१॥

दक्षिणं पूर्वम् † ॥ २२ ॥

दक्षिणस्याम्धुरि योयुक्तस्तं पूर्वं संस्कुर्यात् पश्चादुत्तरमिति ॥२२॥

तथा प्रष्टी † ॥ २३ ॥

यथा धुर्यौ तेनैव क्रमेण प्रष्टी संस्कुर्यात् पार्श्ववर्त्तिनौ प्रष्टी ॥२३॥

सर्वाण्येकैकस्मिन् उदक्षऽस्थमिति शाण्डिल्यः † ॥२४॥

---

* शाट्यायनकेनैतेन सूत्रद्वयं कृतम्।

† शाट्यायनकोऽप्येवम्।

सर्वाण्यश्वनामानि अष्टावपि एकैकस्मिन्नश्वे प्रयुञ्जीत दक्षिणा-द्वारभ्यानन्तर्येण उदकसंस्थमिति शाण्डिल्य आचार्य आह ॥ २४ ॥

सर्वाण्येकस्मिꣳस्तूष्णीमितराणीत्यपरम्* ॥ २५ ॥

सर्वैरष्टाभिरश्वनामभिरेकमश्वं दक्षिणस्य मुख्यं संख्यात् तूष्णी-मितराणि संख्यात् उदकसंस्थमेव इत्यपरं विधानम् ॥ २५ ॥

एतान्येवाश्वास्वतरेष्वश्वतरीषु च यथार्थमूहेत्* ॥ २६ ॥

एतान्येवाश्वनामानि अश्वासु अश्वतरेषु च अश्वतरीषु च यथार्थ-मूहेत् यद्यश्वाभिर्युक्तः स्यात् अश्वतरैर्वा अश्वतरीभिर्वा तत्र तत्र यथासम्भवमूहेत् ऊह उच्यते अश्वासि अन्त्यासि मय्यसि हयासि वाजिन्यसि सप्त्यसि दृष्यसि अर्वत्यसि इति अश्वतरोऽसि शेषाश्ववत् अश्वतर्यसि शेषाश्वावत् ॥ २६ ॥

त्रिभिश्चेदर्द्धान्येकस्मिन्नर्द्धानि द्वयोर्द्वैधन्द्वयोः* ॥ २७ ॥

त्रिभिश्चेद्युक्तो भवति अर्द्धान्येकस्मिन् प्रयुञ्जीत अर्द्धानि द्वयोः द्वे द्वे नामनी पूर्वोक्तेनैव क्रमेण द्वैधन्द्वयोः यदि द्वाभ्यां युक्तो भवति तदा द्विधा नामानि विभज्य युञ्जीत पूर्वोक्तेनैव क्रमेण ॥ २७ ॥

इति द्वितीयस्य सप्तमी कण्डिका ।

---

* द्राह्यायणेऽप्येवम् ।

अथ अष्टमी कण्डिका ।

आदित्यानामिति रथशिर आलभ्य जपेत्* ॥ १ ॥

आदित्यानामित्येतद्यजुः रथशिर आलभ्य जपेत् शिरःप्रष्टनी-रथकारेभ्यो ज्ञेया ॥ १ ॥

यद्रथ्यꣳ स्याद्दायोरिति चर्मण्यं प्रतिगृह्णीयात् † ॥ २ ॥

रथस्येदं रथ्यं यत्किञ्चिद्रथाङ्गं चर्मण्यं चर्मणा निर्वृत्तं चर्मण्यं तद्दायोष्ट्वेत्यनेन यजुषा प्रतिगृह्णीयात् ॥ २ ॥

नक्षत्राणामित्यस्थिमयम् † ॥ ३ ॥

यदस्थिमयं रथ्यं तन्नक्षत्राणामित्यनेन यजुषा प्रतिगृह्णीयात् ॥३॥

सूर्य्यस्येत्ययो लोहे † ॥ ४ ॥

सूर्यस्येत्यनेन यजुषा कार्ष्णायसं यत्स्यात् रथ्यं ताम्ररजतकांस्य-रीतिकादिभ्यो लोहेभ्यो निर्वृत्तं तत् प्रतिगृह्णीयात् ॥ ४ ॥

हिरण्यञ्च † ॥ ५ ॥

---

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेन चतुर्भिरेकसूत्रं कृतम् ।

अनेनैव मन्त्रेण प्रतिगृह्णीयात् यद्द्रव्यं वक्ष्यति हिरण्यमिति जातरूपं प्रतिगृह्णीयादिति मन्त्राम्नानसामर्थ्यादेतस्मिन् क्रमेण द्रव्यदेवतोपदेशः अतः प्रतिग्रहविधिस्तु प्रकरणे एव वक्ष्यते साम्प्रतं रथगिर आलभ्यानन्तरम् ॥ ५ ॥

दक्षिणेन रथं गत्वा रथन्तरमसीति दक्षिणं चक्रमालभेत्* ॥ ६ ॥

दक्षिणेन रथस्य गत्वा रथन्तरमसीत्यनेन यजुषा दक्षिणं चक्रमालभेत् ॥ ६ ॥

वामदेव्यमसीत्यधिष्ठानम्* ॥ ७ ॥

वामदेव्यमसीत्यनेन यजुषा अधिष्ठानमालभेत् रथमारुह्य रथी यत् स्थानमधितिष्ठति तदधिष्ठानम् ॥ ७ ॥

बृहदसीत्युत्तरं चक्रम्* ॥ ८ ॥

बृहदसीत्यनेन यजुषोत्तरं चक्रमालभेत् ॥ ८ ॥

अङ्कान्यङ्कू इति चक्रे एव संमृज्यात्* ॥ ९ ॥

अङ्कान्यङ्कू इत्यनेन यजुषा चक्रयोः संमार्जनं कुर्यात् एवेति प्रवृत्तावधारणं क्रियते ॥ ९ ॥

---

* आश्वलायनेऽप्येवम् ।

वैश्वानर इति दक्षिणेन प्रादेनारोहेत्* ॥ १० ॥

वैश्वानर इत्यनेन यजुषा दक्षिणेन पादेन प्रथममारोहेत् ॥१०॥

आरुह्य जपेद्गिर्द्वैषत इति* ॥ ११ ॥

उभाभ्यामारुह्य गिर्द्वैषत इत्येतद् यजुर्जपेत् ॥ ११ ॥

कृशेति सव्यानभीशूनायच्छेत्* ॥ १२ ॥

कृशेत्यनेन यजुषा यौ रथस्य सव्ये पार्श्वेऽश्वौ तयोरश्मीनायच्छेत् आयतान् कुर्यात् रश्मीनिति बहुवचनमुभयतो रश्मयोभवन्त्य-श्वानाम् ॥ १२ ॥

दासेति दक्षिणानवगृह्णीयात्* ॥ १३ ॥

दासेत्यनेन यजुषा दक्षिणयोरश्वयोरश्मीनवगृह्णीयात् अव-ग्रहणमाचं नात्यन्तं गच्छेत् ॥ १३ ॥

अवरुह्य सकृदारुणमुक्त्वा यथा देवतमादिश्योपरिष्टा-ज्जपं जपेदिति गौतमः* ॥ १४ ॥

अवतीर्य्य रथात् सकृदारुणं यजुरुक्त्वा यथादेवतमादिश्य

* द्राह्यायणोऽप्येवम् ।

उक्तं वायोरिति यमेवं प्रतिमन्त्रीयादित्येतदादि द्रव्याणामश्वानां रथस्य गौतम आचार्य्य आह* ॥ १४ ॥

संमार्जनप्रभृत्येतत् सर्वं कृत्वा विमुच्य नाना पुरस्ताज्जपोपरिष्टाज्जपौ वारुणमश्वेभ्यो रथाय चेति धानञ्जप्यः † ॥१५॥

संमार्जनप्रभृत्यवरोहणान्तं एतत् सर्वं कृत्वा विमुच्याश्वौ नाना एकैकस्मिन् द्रव्ये पुरस्ताज्जपोपरिष्टाज्जपौ भवेतां वारुणन्तु यजुः अश्वार्थमेव स्याद्रथार्थञ्चेति एवं धानञ्जप्य आचार्य आह ॥ १५ ॥

स्थायेश्चेद् यथासनं व तत् सर्वं जपेत् † ॥ १६ ॥

यद्येतत्कर्म नोत्सहेद्यथादेशं कर्तुं तदा चौदुम्बर्यामेवोपविष्ट एतत् सर्वं जपेत् ॥ १६ ॥

पृष्ठ्यञ्चेद्दद्यात् प्रागवारुणादश्वनामानि जपेत् † ॥ १७ ॥

---

* पुस्तकत्रयेऽप्यत्र पतितमनुमीयतेऽसंबद्धत्वात्, द्राह्यायणे तु "रथादवरुह्य वडवाश्वा नयतु देवि दक्षिणे इत्येकं वाक्यं मन्त्रं वडवयमनेनोहेन सकृदुक्त्वा यथादैवतमश्वांश्च रथञ्च आदेश्य तेनामृतत्वमसीयेत्युपरिष्टाज्जपमूहेन सकृद्ब्रूयात् तद् यथा वडवोवो नयतु देव्या दक्षिणाः वडवायास्मान् उत्तानायाङ्गिरसाय रथन्तरमम्तृतत्वमसीयेतीति" धन्विकृतटीकास्ति ।

†. द्राह्यायणेऽप्येवम् ।

यदि पृष्ठ्यमन्वन्द्धयाद् यजमानः पृष्ठेन वहतीति पृष्ठ्यः, तदा पुरस्ताज्जपं जपित्वा प्राग्वारुणात् मन्त्रादयनामानि जपेत् ॥ १७ ॥

पुरस्ताज्जपाद्वा* ॥ १८ ॥

प्रागिति प्रकृतम् ॥ १८ ॥

तथादान्तेषु* ॥ १९ ॥

तथा अदान्तेष्वश्वेषु यथा पृष्ठ्यः तेन प्रकारेणेत्यर्थः ॥ १९ ॥

यद्द्रथ्यं स्यात्तेन तत् प्रतिगृह्णीयात्* ॥ २० ॥

रथमिव रथ्यं चर्मणादि यद्द्रव्यं रथेन तुल्यं तेन तत् प्रतिगृह्णीयात् ॥ २० ॥

अनस्येति प्राग्वारुणादवेः* ॥ २१ ॥

अनस्यानपतिरित्येतद्यजुः प्राग्वारुणात् मन्त्रादवेः प्रतिग्रहे जपेत्, ननु तत् किमिदं प्राग्वारुणादिति यदा प्रागेव वारुणात् मन्त्रादयं मन्त्रः पठितः उच्यते विकल्पार्थं वक्ष्यति पुरस्ताज्जपादेति ॥ २१ ॥

पुरस्ताज्जपाद्वा* ॥ २२ ॥

---

* आश्वायबोध्येवम् ।

वारुणाद्वा प्राक् पुरस्तादपाद्वा जपेत् ॥ २२ ॥

ग्रास्त्वा कृतं निति वसनस्य* ॥ २३ ॥

ग्रास्त्वा कृतं नित्येतद्यजुः वाससः प्रतिग्रहे प्राग्वारुणात् स्यात् पुरस्तादपाद्वा ॥ २३ ॥

तदुदस्येदताम्तवे* ॥ २४ ॥

तद्वा ग्रास्त्वा कृतमिति यजुः उत्क्षिपेत् अताम्तवे वसने यत्र तन्तुभ्यो निर्वृत्तं तदताम्तवं नवतादि चर्ममयं कुशिचादि ॥ २४ ॥

हिरण्यमल्पीयो भोगादागच्छेदौदुम्बर्य्यामाश्लेषयेत्* ॥२५॥

हिरण्यमल्पीयः यस्य भोगो नास्ति तदौदुम्बर्यामाश्लेषयेत् ॥२५॥

आग्नीध्रीये वा जुहुयात्* ॥ २६ ॥

आग्नीध्रीये वा तद्धिरण्यं जुहुयात् न भोगाय कल्पेत् ॥ २६ ॥

समस्तान् श्रोत्रियवानेकक्रतौ प्रतिगृह्णीयात्* ॥ २७ ॥

एकस्मिन् क्रतौ श्रोत्रियवान् समस्तान् प्रतिगृह्णीयात् न व्यस्तान्

---

* द्राह्यायणोऽप्येवम् ।

न पृथगित्यर्थः, अपरे ब्रुवते एककताविति ज्योतिष्टोमे एतत् तद्य-
दाङ्गरेबोयच्च इत्येतस्मात् ॥ २७ ॥

तथा तिलमाषान्* ॥ २८ ॥

यथा व्रीहियवान् तथा तिलमाषान् तेन प्रकारेणेत्यर्थः प्रति-
गृह्णीयादिति वर्त्तते ॥ २८ ॥

प्राजापत्येनानादिष्टदेवताः प्रतिगृह्णीयात्* ॥ २९ ॥

यासां दक्षिणानां देवता अनादिष्टास्ताः प्राजापत्येन मन्त्रेण
गृह्णीयात् प्रजापतये गर्दभमित्येतदादिवत् ॥ २९ ॥

तूष्णीमयज्ञे दक्षिणा इति धानञ्जप्यः* ॥ ३० ॥

या अयज्ञे दक्षिणाः तासु प्रतिग्रहणमन्त्रो निवर्त्तते इत्येवं धान-
ञ्जप्य आचार्यो मन्यते कः पुनरयज्ञाधिकार इति उच्यते यज्ञस्य
उद्वाचे कश्चिद्धिरण्यादिकं ददाति यथा हिरण्यमस्यीयो भोगादागच्छे-
दैदुम्बर्यीमाश्रयेदिति यज्ञस्य चलितो देव इति च कन्याप्रदानादि
तत्र तूष्णीं प्रतिगृह्णीयादिति ॥ ३० ॥

भूर्भुवः स्वरिति गौतमः* ॥ ३१ ॥

भूर्भुवः स्वरित्यनेन प्रतिगृह्णीयात् एवं गौतम आचार्य
आह ॥ ३१ ॥

---

* आश्वलायनोऽप्येवम् ।

ओमिति वोमिति वा* ॥ ३२ ॥

ओमित्येवं वा प्रतिगृह्णीयात् एवं मन्यते गौतमः ॥ ३२ ॥

इति द्वितीयस्य अष्टमी कण्डिका ।

---

अथ नवमी कण्डिका ।

पूर्वं गाराग्रंसन्धवियवायवनीये प्रस्तोता पृष्ठयोमं जुहुयाद्यत्पृष्ठं स्यात्तद्दिग्याद्ः पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहुतमिमं यज्ञमभिसंवसानाद्योवात्तृप्यन्तु सुमनस्यमानाः स्वाहेति पूर्वाम्* ॥ १ ॥

इविधानप्रतियहविधानमुक्तं वाम्प्रतमनन्तरं पृष्ठ्यस्तोपाकरणं तत्सम्बद्धं प्रस्तोतृकर्मोच्यते द्वौ गारावंशो माध्यन्दिने तयोः पूर्वं भक्षिता वाचवनीयेऽहो प्रस्तोता पृष्ठ्योमं जुहुयात् तस्मिन्नहनि यत् पृष्ठं स्यात्तदादिग्य अदः पिबतु सोम्यं मध्वायुरित्येतद्दादिना मन्त्रेण अद इति सर्वनामस्थाने रथन्तरं पिबत्वित्येतदादिवत् ॥ १ ॥

स्वाहाकारेणोत्तराम्* ॥ २ ॥

पूर्वां यथोक्तेन मन्त्रेण हुत्वा उत्तरां स्वाहाकारेण जुहुयात् ॥२॥

---

* द्राह्यायणेऽप्येवम् ।

द्वैधं जुञ्जयादिति धानञ्जय्योऽह्नः पिबतु सोम्यं मध्वायुर्द-धद्यज्ञपतावविह्रुतं स्वादेति पूर्वामिमं यज्ञमित्युत्तराम्* ॥ ३ ॥

द्वैधं द्विधा कृत्वा एवं जुञ्जयादिति धानञ्जय्य आचार्य आह ॥३॥

षोडशिकपृष्ठेभ्य इति¶ ॥ ४ ॥

षोडशिकपृष्ठार्थमेवमभिसमन्यं कृत्वा ॥ ४ ॥

रेवतीषु वारवन्तीयमिति षष्ठे पृष्ठादेशं गौतमो महा-व्रतमिति व्रते† ॥ ५ ॥

रेवतीषु वारवन्तीयं पिबतु इत्येव षष्ठेऽहनि पृष्ठादेशं गौतम आचार्यो मन्यते महाव्रतं पिबत्वित्येवं महाव्रते ॥ ५ ॥

रेवत्यश्च वारवन्तीयञ्चेति धानञ्जय्यो यावन्ति पृष्ठस्थानि स्युः सर्वाण्येव प्रसञ्चक्षीत पिबतु दधदिति च यथार्थ-मूहेत्* ॥ ६ ॥

रेवत्यश्च वारवन्तीयञ्चेत्येवं षष्ठेऽहनि पृष्ठादेशं धानञ्जय्यो मन्यते

---

* द्राह्यायणेनैतेन सूत्रत्रयं कृतम् ।

¶ द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम् ।

यावन्ति सामानि महाव्रते पृष्ठस्थानि भवन्ति सर्वेषामेव परि-संख्यानं कुर्यात् पिबतु दधदिति चैते पदे यथार्थमूहेत् प्रयोगस्तु रैवत्यस्य वारवन्तीयस्य पिबतां सोम्यं मध्वायुर्दधतीति शेषो मन्त्रः सामान्यः एवं षष्ठे गायत्ररथन्तरबृहद्राजनभद्राणि पिबतु सोम्यं मध्वायुर्दधती दधन्तीति चेत्येवं महाव्रते मन्त्रशेषः सामान्यः एवे-त्युक्तम् उभयपक्षेणाम्नातं भद्रे पुच्छे यज्ञायज्ञीये च पुच्छे यथार्थं न केवलमेवं षष्ठमहाव्रतयोः यत्र यत्रानेकसामपृष्ठता तत्र तत्रैव-मर्थवत्त्वात् ॥ ६ ॥

बृहता रथन्तरेण वा स्तोष्यमाणः प्राक् स्तोमयोगादिमा व्याहृतीर्मनसा ध्यायेदेरमिति* ॥ ७ ॥

बृहता रथन्तरेण वा स्तोष्यमाणः स्तोतुमिच्छन् उद्गाता स्तोम-योगात्पूर्वं इमा व्याहृतीर्मनसा ध्यायेदैरमित्येतदाद्याः यथाम्नानादेव सिद्धे इमले संख्याग्रहणं किमर्थं इमेति चेत् उच्यते अनुलिङ्ग विभागो माभूदिति, व्याहृतिग्रहणं संव्यवहारार्थं वक्ष्यति स्तवं पूर्वं व्याहृतिभ्य इति ॥ ७ ॥

रथन्तरएवर्चं यस्ते गोष्विति* ॥ ८ ॥

रथन्तरएव केवले स्तवं ध्यायेत् यस्ते गोष्वित्येतां एवशब्दः अन्यत्र प्रयुक्ते रथन्तरे माभूदिति स्तवमिति संव्यवहारार्थमेव स्तवं पूर्वं व्याहृतीभ्य इति ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

युक्त्वा स्तोममेतद् ब्रूयादिति शाण्डिल्य ऋचं पूर्व्वं व्याहृतिभ्य इति* ॥ ९ ॥

यदेतदुक्तं प्राक् स्तोमयोगाद्व्याहृतीर्मनसा ध्यायेदेरमित्येतदादि एतद्युक्त्वा स्तोमं ब्रूयादिति शाण्डिल्य आचार्य्य आह अथन्तु क्रमः ऋचं पूर्व्वं व्याहृतीभ्य इति ॥ ९ ॥

इतरं धानञ्जप्यम्* ॥ १० ॥

यत्पूर्व्वमुक्तं तत् धानञ्जप्यस्य मतम् ॥ १० ॥

रथन्तरे प्रस्तूयमाने सर्व्वत्र सम्मीलेत्* ॥ ११ ॥

रथन्तरे साम्नि प्रस्तूयमाने सर्व्वत्र सम्मीलेत् यावत्कालः प्रस्तूयते तावत्कालः सम्मीलनं कुर्य्यात् अथ सर्व्वग्रहणं किमर्थमिति चेत् उच्यते एवं ब्राह्मणम् ईश्वरं वै रथन्तरमुद्गातुश्चक्षुः प्रमथितः प्रस्तूयमाने संमीलेत्स्वर्दृशं प्रतिवीक्षेतेति प्रथमायामृच्यस्य विधेः क्रियां दर्शयति स्वर्दृशं प्रतिवीक्षेतेति तेन यद्विषयमेव प्रतिवीक्षमाणमादिश्यते तद्विषयमेवं सम्मीलनं गम्यते सोऽयमाचार्य्यः सर्व्वत्रेत्येवमारभते कथमुत्तरयोरपि स्तोत्रीययोः सम्मीलनप्रतिवीक्षणे भवेयातामिति यावता रथन्तरधर्म्मोऽयं नायमृग्धर्म्मः स्वर्दृशशब्दः कालमात्रज्ञापकः वक्ष्यति प्राक् प्रतिहारं चतुरक्षरं त्रिधा तत् सर्व्वत्र प्रतिवीक्षेतेति अपरे वर्ण-

* द्राह्यायणोऽप्येवम्।

यन्ति वक्ष्यत्ययं तस्मात्पृच्छ्यते यतो निवर्त्तेरन्धर्मा इति तत्कथं निवर्त्तमानेष्वन्येषु धर्मेषु सम्मीलनं स्यादिति अतः सर्वत्रेत्युक्त-मिति ॥ ११ ॥

**एकैकं मनसाक्षरं स्तोभैर्वाचा संयुञ्ज्यात् प्रथमस्वरैर-कारैर्भकारादिभिरक्रान्तैर्द्वितीयस्वरोत्तमैः* ॥ १२ ॥**

एकैकमुद्गीथाक्षरं मनसा ध्यायेत् स्तोभैर्वाचा संयुञ्ज्यात् उक्तं ब्राह्मणे वल्गता कुर्वता गेयमिति एतत् स्तोभरूपं सूत्रकारः स्वत्य-क्षरं दृष्ट्वा विकल्पयति प्रथमस्वरैरकारैर्भकारादिभिरक्रान्तैरिति अक्षराणां स्तोभानाञ्च युगपत्क्रियां दर्शयति वल्गता कुर्वता गेय-मिति प्रथमस्वरैरकारैः उक्तस्वराः प्रथमद्वितीयतृतीयचतुर्थमन्द्राति-स्वार्या इति तैरकारैर्भकारादिभिर्भकार उच्चारणार्थः भकारैस्ते अकारा उच्चार्यन्ते अक्रान्तैः अक्रान्ताः तान् प्रयुञ्जीत द्वितीयस्वरो-त्तमैः यस्तेषामुत्तमो वर्णः स द्वितीयेन स्वरेण स्यात् ॥ १२ ॥

**एतद्यथाधीतमित्याचक्षते* ॥ १३ ॥**

एवं प्रयुज्यमानं रथन्तरं यथाधीतं प्रयुक्तं भवतीति एवमाच-क्षते एतच्च रथन्तरं यथाधीतं प्रयोक्तव्यमिति अथ एके ब्रुवते एतेषा-मेव वल्गेति स्तोभानां अनुकरणमकार इति अपरा स्तुतिः रथ-न्तरे लक्षरमकारान्तरवन्ति व्यञ्जनानि यथाक्षरं दर्शयेत् तद्यथा

---

* लाट्यायनेन सूत्रत्रयेणैकसूत्रं कृतम्, तथा तेषु छेदविषये विभेदोऽप्यस्ति ।

स्वरेण सर्वाणि व्यञ्जनानि व्याप्तान्येवं सर्वान् कामानवाप्नोति यश्चैवं वेद यश्चैते स्वरवन्तः प्रयुज्यन्ते यश्चैवं विद्वान् प्रयुङ्क्ते यथा चाग्नि-चन्द्रसूर्याभास्वन्तोऽपहततमस्काः सद्दृश्यमाना भवत एवं साम च भात्यग्निर्भाति चन्द्रमा भाति सूर्यो भान्ति ज्योतींषि भाति रथन्तर-मिति भकाराणामेव दीप्तिं दर्शयति स्वरवतां रथन्तरस्य स्तोभानां स्वरवन्तः प्रयोक्तव्या इति यत्र तु व्यञ्जनवन्तः प्रयुज्येरन् क्षोधुका च वध्यायिनाव प्रजयावुद्गातृयजमानौ स्यातान्तस्मादन्वक्षरं प्रयुञ्जानः स्वरवन्ति व्यञ्जनानि यथाक्षरं दर्शयेत् एका स्मृतिः तस्माद्विकल्पः स्यात् ॥ १३ ॥

प्राक् प्रतिहाराच्चतुरक्षरं शिष्ट्वा तत् सर्वत्र प्रतिवीक्षेत* ॥१४॥

प्राक् प्रतिहाराच्चत्वार्यक्षराणि शिष्ट्वा तच्चतुरक्षरं प्रतिवीक्षेत सर्वग्रहणस्य प्रयोजनं समीक्षणविधावेवोक्तम् ॥ १४ ॥

स्तुत्वा वरञ्चोदयेत्¶ ॥ १५ ॥

स्तुत्वा रथन्तरेण यजमानं वरं प्रति प्रेरयेत् ॥ १५ ॥

तस्याप्रष्टस्य सतो निवर्त्तेरन्धर्माः † ॥ १६ ॥

---

* द्राह्यायणेन सूत्रत्रयेणैकसूत्रं कृतम्, तथा तेषु हेरविषये विशेषोऽप्यस्ति।

¶ द्राह्यायणेऽप्येवम् ।

† द्रायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

तस्य रथन्तरस्य अपृष्ठस्य सतः निवर्त्तेरन् धर्माः व्यावृत्य स्तोत्रा-द्ययो धर्माः सर्वे निवर्त्तेरन् अतोऽस्य ग्रहणं किमर्थमिति चेत् उच्यते तस्येति तस्यैव न बृहद्वामदेव्ययोस्तु पुनरपि रथन्तरं पृष्ठयोः सतो निवर्त्तेरन्धर्माः तथा सत इति पृष्ठगतस्य तु रथन्तरस्य गुणभूतस्यापि सतो नैव निवर्त्तेरन्धर्माः तथा बृहतः ॥ १६ ॥

सह स्तोभैरिति गौतमः* ॥ १७ ॥

सह स्तोभैर्धर्मा निवर्त्तेरन्नित्येवं गौतम आचार्यो मन्यते ननु सर्वे एवामीषेष धर्मा निवृत्ताः कुतस्तोभनिवृत्तिर्येन गौतमस्तो-भान्निवर्त्तयतीति उच्यते, वक्ष्यति स्तोभा एवान्वियुरिति धानञ्जप्यः इति उक्तं परमतमनुमतमप्रतिषिद्धमिति तेन गौतमस्यानिष्पृष्टा एव स्तोभक्रियाः ॥ १७ ॥

स्तोभा एवान्वियुरिति धानञ्जप्यः † ॥ १८ ॥

सर्वेऽन्ये धर्माः अपृष्ठस्य निवर्त्तेरन् स्तोभा एव केवला अन्वि-युरित्येवं धानञ्जप्यो मन्यते ॥ १८ ॥

अग्निष्टोमसामसन्धिसाम्नोरेवापृष्ठं स्तोभेदिति शाण्डि-ल्यः † ॥ १९ ॥

---

* द्राह्यायणेन सूत्रद्वयेनैकसूत्रं कृतम् ।

† द्राह्यायणोऽप्येवम् ।

अग्निष्टोमसाम वा यदा स्यात् वन्हिसाम वा तदा अवहृतमपि स्तोभेत् एवं माखिक्य आह ॥ १९ ॥

सर्वत्राऽस्वस्तोत्रीयं न स्तोभेदिति स्थविरो गौतमः* ॥२०॥

सर्वत्र पृष्ठगतश्चान्यत् स्वानगतश्चास्वस्तोत्रीयं न स्तोभेदिति स्थविरो गौतम आह ॥ २० ॥

इति द्वितीयस्य नवमी कण्डिका।

---

अथ दशमी कण्डिका।

वामदेव्येन स्तोष्यमाणः प्राक् स्तोमयोगात्प्रावो अश्वा अजा-वयोऽव्रीहियवा इति मनसा ध्यायेत्* ॥ १ ॥

इहद्रथन्तरयोः सामान्यविशेषधर्मा उक्ताः साम्प्रतं वामदेव्य-धर्मा विवक्षिताः तान्विवक्षुराह। वामदेव्येन स्तोष्यमाण इति वाम-देव्येन साम्ना स्तोष्यमाणः स्तोतुमिच्छन् पूर्वं स्तोमयोगात् गावो अश्वा अजा इत्येतदादि मनसा ध्यायेत् अन्योऽन्यधर्म उक्तः यथाकुर्वीपुच्छा-मिति, अथ विषमासः किमर्थमिति चेत् गोऽश्वाजाविव्रीहियवान् मनसा ध्यायेत् इत्येवं वक्तव्यमासीत् उच्यते यद्येवमवक्ष्यत् तदा

---

* आम्नायवेदोऽप्येवम्।

गवादीनां द्रव्याणां ध्यानमभविष्यत् तदेवं माभूदित्यत आह आचार्यो गावो अश्वा इत्येतदादि तेन किं गावो अश्वा इत्येतदादि मन्त्रं मनसा ध्यायेदिति ॥ १ ॥

अग्न्याग्नि यः कामो यजमानस्य स्यात् स सिध्यत्विति ध्यायन्नुपासीत* ॥ २ ॥

अग्न्याग्नि स्तूयमाने यः कामो यजमानस्य भवेत् स सिध्यत्वित्येवं ध्यायन् यजमान उपासीत अत्र सन्देहः किं क्रतुकामस्य ध्यानं उत यथाकाम्यं कामस्य ध्यानमिति उच्यते, क्रतुकामस्य ध्यानं न यथाकाम्यं कथमेतद्गम्यत इति चेत् उच्यते, उद्देशनिर्देशाभ्यां यः स इति यः क्रतुकामस्तं ध्यायेदिति अन्यथा हि अग्न्याग्नि यजमानः कामं ध्यायेदित्येवमवक्ष्यत्सूत्रम् ॥ २ ॥

तथेतर उद्गायन्* ॥ ३ ॥

तथा इतर उद्गाता यजमानस्य कामः सिध्यत्वित्येवं ध्यायन्नुद्गायेत् ॥ ३ ॥

आर्भवेण स्तुत्वा पुरोडाशादेकैकं पिण्डमश्नीयुरुत्तराऽपरया द्वारा हविर्द्धानं प्रपद्याधस्तात् स्वस्य चमसस्य कुर्यु-

* द्राह्यायणोऽप्येवम् ।

यदासन्नः स्यादत्र पितरोमादयध्वं यथा भागमावृषायध्व-मिति* ॥ ४ ॥

आर्भवेन पवमानेन स्तुत्वा तार्तीयसवनिकात्पुरोडाशात् एक-देशं गृहीत्वा एकैकं पिण्डम्बीं स्तीर्त्वा अपरया द्वारा पश्चिमया द्वारा हविर्द्धानं प्रविश्य अधस्तात्तस्य चमसस्य समीपे दर्भेषु पिण्डा-न्दद्युः यस्मिन् काले आसादितः स्यात् हविर्द्धाने चमसः पिण्डा-न्निधाय जपेयुः अत्र पितरोमादयध्वं यथा भागमावृषायध्वमिति ॥४॥

तमाह्रियमाणं प्रतिमन्त्रयेरन्नमीमदन्त पितरो यथाभाग-मावृषायिषतेति* ॥ ५ ॥

तं चमसं भक्षार्थमाह्रियमाणं प्रतिमन्त्रयेरन्नमीमदन्त पितर इत्यनेन ॥ ५ ॥

सोम्यमाहृतमुद्गातावेक्षेतायुर्म प्राण इति* ॥ ६ ॥

सोम्यं चरुमाहृतं उद्गातावेक्षेत आयुर्मे प्राण इत्येतदादिना यजुषा साम्नां वै देवानां चरुमासीनानामित्येतदादि ब्राह्मणं सोम्य-स्यावेक्षणं दर्शयति उद्गातृग्रहणं आचार्यमतेन सर्वेषां कर्मणि प्रकृते अवश्यमुद्गातृग्रहणं करोति ॥ ६ ॥

पुनरस्मासु दधासीत्यन्तः* ॥ ७ ॥

---

* शाट्यायनोऽप्येवम्।

अत्र सोमावेक्षणमन्त्रस्य पुनरन्यास्तु इन्द्रपीतस्येतोऽन्तः अथोच्यते उत्तरादिः पूर्वोक्तमन्त्रमिति एवं विज्ञायमाने मन्त्रस्थाने तत् किमिदं विज्ञापनं क्रियत इति उच्यते वक्ष्यति तं हुतमेऽन्वभ्यस्येयु-रिति तच्चैतावन्मन्त्राभ्यासप्रदर्शनार्थमिति ॥ ७ ॥

तं हुतमेऽन्वभ्यस्येयुः* ॥ ८ ॥

तमेवैवमन्त्रवाक्यं हुतमेऽपीति द्विर्ब्रूयुः ॥ ८ ॥

यज्ञे यज्ञमित्येके* ॥ ९ ॥

आयुर्मे प्राण इत्येतस्य प्राणमन्त्रस्य स्थाने यज्ञे यज्ञमित्येतमेके आचार्या मन्यन्ते ॥ ९ ॥

पूर्वेण त्वेवावेक्षेत* ॥ १० ॥

तुशब्दो व्यावृत्त्यर्थः यदेतत् पूर्वोक्तमवेक्षणमन्त्रं तेनैवावेक्षेत न द्वितीयेन ॥ १० ॥

तस्मिन्नङ्गुष्ठानामिके अवधायाक्षिणी विमार्ष्टि येना-श्राजिमिति † ॥ ११ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणे विशेषोऽस्ति ।

तस्मिन्नुत्तरधृते सोम्ये चरौ अङ्गुष्ठम् अनामिकाङ्गुलिञ्चावधाय भक्षिणौ विभक्षयेत् येनाग्नाविमित्येतदादिना चक्षुषा तस्मिन् चक्षुर्वा यदि पूर्वं चक्षुत्तरेणावेक्षेत कुर्यादेवैतत् ॥ ११ ॥

एवमितरौ कुर्याताम्* ॥ १२ ॥

एवमनेन विधिना इतरौ भक्षौ कुर्याताम् ॥ १२ ॥

प्रतिहर्त्ता पश्चात्* ॥ १३ ॥

एव क्रमः प्रस्तोता पूर्वः पश्चात् प्रतिहर्त्ता ॥ १३ ॥

तमुत्तरेण प्रतिहर्त्तारं हरेयुः † ॥ १४ ॥

तमवेक्षितं सोम्यं प्रतिहर्त्तुरुत्तरेण हृत्वा पश्चिमया द्वारा निष्काम-येयुः यदि वा ब्राह्मणोक्तेन विधिना प्राश्नीयात् दक्षिणार्द्धं सदसो गत्वैतं सोम्यातिशेषं प्राश्नीयादिति ॥ १४ ॥

यज्ञायज्ञीयस्य हिंकारं प्रति पत्नीमुद्गातेक्षेत † ॥ १५ ॥

पत्नी चोद्गातारमीक्षेत ॥ १५ ॥

निधनं प्रति पत्नी दक्षिणमूरुमभिषिञ्चेत् † ॥ १६ ॥

---

* भाष्यकारेण सूत्रद्वयेनैकसूत्रं कृतम् ।

† भाष्यकारोऽप्येवम् ।

निधने उच्यमाने पत्नी पाचेऽप्यलीभिरद्भिः स्वं दक्षिणमूरुमभिषिञ्चेत् तत् दक्षिणमूरुमभिषिञ्चन्त इति हि ब्राह्मणम् ॥ १६ ॥

तृतीयायां स्तोत्रीयायां प्रस्तुतायां सर्वं तदुदकं निनयेत्* ॥ १७ ॥

तृतीयायां स्तोत्रीयायां प्रस्तुतायां पत्नी स्वकिमूरौ सर्वन्तदुदकं निनयेत् सर्वशब्दो निरवशेषवाची उत्पत्तिस्तोत्रीयायां कर्मस्तोत्रीयायां प्रस्तुतायामिति विवदन्ते तृतीयाशब्देन कर्मस्तोत्रीयायां न्याय्यतरम् ॥ १७ ॥

उत्तमायां स्तोत्रीयायां भुवद्वाजायिभुवद्वाजेष्वित्यभ्यस्येन्नामिति च निधनमनुष्टुभमुत्तमामक्षरेणान्तत इति श्रुतेति* ॥ १८ ॥

स्तोत्रस्योत्तमायां स्तोत्रीयायां भुवद्वाजायि भुवद्वाजेष्विति एवमभ्यासं कुर्यात् अस्य चतुरक्षरस्याभ्यासे सति नामिति च निधनं कुर्यात् यस्मादेवं ब्राह्मणम् अनुष्टुभमुत्तमां सम्पादयतीति अक्षरेणान्ततः प्रतिष्ठाप्यमिति च ॥ १८ ॥

अनभ्यासन्त्वाचार्य्या निधनञ्च यथाम्नायं शाण्डिल्यः† ॥१९॥

---

* द्राह्यायणोऽप्येवम्।

† द्राह्यायणेनैतेन सूत्रद्वयं कृतम्।

अनभ्यासमेवाचार्या मन्यन्ते चतुरक्षरस्य निधनस्य यथाम्नायमेव कुर्युरित्येवं शाण्डिल्य आचार्यो मन्यते अनभ्यासश्चेति चशब्दः तु-शब्दो हेत्वर्थः को हेतुः यस्मात्पञ्चोपन्यासब्राह्मणमेवेदं प्रकरणाद्दिता वा इति हि ॥ १९ ॥

तद्यदानुशंसन् होतापोच्छिष्टोया ब्रूयात्तदैनमन्वालभे-रन्नपावृण्वानाः* ॥ २० ॥

तद्यज्ञायज्ञीयं यदा यस्मिन् काले अनुशंसन् होतापोच्छिष्टोया यथा ब्रूयात् तदा तस्मिन् काले एनं होतारं अन्वालभेरन् स्पृशेयुः अपावृण्वानाः प्रावरणान्यपास्यमानाः अपावृण्वाना इति सर्वेषां पूर्वं प्रावृतानां क्रियां दर्शयति उक्तं प्रावृतेनोद्गेयमिति वैश्वानरेणा-नभिदाहायेति तत् सूत्रकारः सर्वेषां प्रावरणं दर्शयति हेतुसम-र्थात् किं हेतुसमत्वम् अनभिदाहः ॥ २० ॥

अन्यत् स्थानगतस्य निवर्त्तेरन् धर्माः* ॥ २१ ॥

यज्ञायज्ञीयस्याग्निष्टोमसाम्नोऽन्यस्थाने प्रयुज्यमानस्य सर्वे धर्मा निवर्त्तेरन् ॥ २१ ॥

यदन्यदग्निष्टोमसाम स्यात्तस्य स्युः* ॥ २२ ॥

यदन्यदग्निष्टोमसाम भवेत् तस्य धर्मा भवेयुः ॥ २२ ॥

---

* शाण्डिल्योऽप्येवम्।

**अहिङ्कारे तु प्रतिहारवेलायां पत्नीमुद्गातेक्षेत* ॥ २३ ॥**

अहिङ्कारेऽग्निष्टोमसाम्नि प्रतिहारवेलायां पत्नीमुद्गाता ईक्षेत पत्नी चोद्गातारम् ॥ २३ ॥

**अनुब्राह्मणमार्चिकान् सकामान् सर्वत्र कुर्यादप्यन्यस्मिन् साम्नि* ॥ २४ ॥**

ये ब्राह्मणे ऽयं साम्नि प्रतिसकामा उक्ताः एवं कृत्वोद्गेयं पत्नी-स्वयमिति सुप्रजस्त्वमिति चैतान् सर्वेऽग्निष्टोमसामसु कुर्वीत सर्व-ग्रहणं पवमानगतेऽपि यज्ञायज्ञीये भवति न केवलं यज्ञायज्ञीये यज्ञस्मिन् रथन्तरेऽपि यत्र प्राप्नोति किमर्थं उच्यते यदा रथ-न्तरेष्वपु अन्यत्पृष्ठं क्रियते तत्राहापि अस्तुव इति सुस्तुव इति वा सकामयेत् ॥ २४ ॥

इति द्वितीयस्य दशमी कण्डिका ॥

---

अथ एकादशी कण्डिका ।

**तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु भक्षयित्वा सोमं विमुञ्चेयुरेतस्य त्वेति* ॥ १ ॥**

---

* आम्नायबोऽप्येवम् ।

तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु भक्षयित्वा चमसं स्तोम-विमोचनं कुर्युः ऋतस्य त्वेत्यनेन यजुषा, ननु तत् किमिदं तृतीयसवन-ग्रहणं यदा सर्वेषु स्तोत्रेषु समाप्तेष्वित्युक्तम् उच्यते इदन्तावद्यजुरुपरि सन्निभक्षात्समाम्नातं तत्र विमोचनं यजुषा तस्मिन्नेव काले प्राप्नोति अतः तृतीयसवनग्रहणं तावत्क्रियते कथं न केवलमुपरि सन्निभक्षात् स्तोमविमोचनं स्यात् यस्यां यस्यां संस्थायां क्रतुः समाप्यते तस्या-मस्यां संस्थायां स्यादिति अथ सर्वग्रहणं किमर्थमिति चेत् स्तोत्रे-ष्विति बहुवचनसामर्थ्यात्सिद्धे सर्वत्वे इदमुच्यते इदं स्तोमविमो-चनं कृतान्तस्तोत्रे दृष्टं प्रतिस्तोत्रञ्च स्तोमयोजनं भवति युक्तस्य च विमोचनं भवत्येव तस्य च युक्तस्य स्तोमस्य यस्मिन् काले विमो-चनमित्येष संशयः अतः सर्वग्रहणं करोत्याचार्यः कथं पूर्वेष्वपि स्तोत्रेषु एकैकस्मिन् स्तोत्रे भक्षयित्वा स्तोमं विमुञ्चेयुः अत्र तु तृतीय-सवने कथमिति ॥ १ ॥

दक्षिणैः पाणिभिः कुशाः संलोभयेयुः* ॥ २ ॥

संलोभनं एकत्रीकरणं कुर्युः ॥ २ ॥

यजमानवाचनादनन्तरमत्र वा यजमानं वाचयेत्तन्तवे-मा ज्योतिषेत्यसावनुमातनु ष्व ज्योतिषेति यथाज्येष्ठं पुत्राणां नामानि गृह्णीयात् † ॥ ३ ॥

* द्राह्यायणोऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रचतुष्टयं कृतम् ।

यजमानवाक्यादनन्तरं यदेतत् स्तुतस्य स्तुतमसीति यजमानवाचनं एतस्मादनन्तरं एतत् कर्म कुर्यात् तदुच्यते अथ वा अस्मिन् काले कुमाराणां संलोभनं कृत्वा कुर्युः इति विकल्पः तन्तवे मा ज्योतिषेत्युक्त्वा अयावनुमातनुहि ज्योतिषेति यथा ज्येष्ठं पुत्राणां नामानि गृह्णीयात् अयाविति सर्वनामस्थाने नाम गृह्णीयात् यो यो ज्येष्ठो यथा ज्येष्ठं प्रयोगस्तु तन्तवे मा ज्योतिषा यज्ञदत्त अनुमातनुहि विष्णुमित्र अनुमातनुहि सोमभूते अनुमातनुहि ज्योतिषा अपरे प्रत्येकं पुरस्ताज्जपोपरिष्टाज्जपौ कुर्वन्ति ॥ ३ ॥

जनिष्यमाणा इत्यजातेषु* ॥ ४ ॥

अजातेषु पुत्रेषु जनिष्यमाणा इति सर्वनामस्थाने कुर्यात् प्रयोगस्तु तन्तवे मा ज्योतिषा जनिष्यमाणा अनुमातनुत ज्योतिषा अजातपुत्रस्यैष कल्पः अपरे ब्रुवते जातपुत्रोऽपि पुत्राणां नामानि गृहीत्वा जनिष्यमाणा इति गृह्णीयात् आशीर्योगत्वात् जनिष्यमाणा इत्यजातेष्विति प्रतिपत्तिरियमिति ॥ ४ ॥

जातेष्वजातेषु च पुत्रा इत्येव सत्रेषु* ॥ ५ ॥

जातेषु अजातेषु च पुत्रेषु सत्रेषु पुत्रा इत्येवं नामग्रहणं प्रयोगः तन्तवे मा ज्योतिषा पुत्रा अनुमातनुत ज्योतिषा यद्येकः कुर्यात् तथापि बहुवचनं कुर्य्यात् नोऽहं कुर्य्यात् ॥ ५ ॥

---

* द्राह्यायणोऽप्येवम् ।

वषट्कृते हारियोजनस्य यथेतमपरया द्वारा निष्क्रामन्तो जपेयुः सोमेहीति* ॥ ६ ॥

वषट्कृते हारियोजनस्य हविषः हारियोजनस्येत्यवयवलक्षणा षष्ठी यथेतं यथागतमित्यर्थः दक्षिणेनौदुम्बर्य्यां गत्वा पश्चिमया द्वारा निष्क्रामन्तो जपेयुः सोमे हीत्येतदादि यजुः अथापरया द्वारेति किमर्थं यदा यथेतमित्युक्ते सिद्धमेवैतत् ते हि समस्तोपस्थानं कृत्वा अपरयैव द्वारा प्रविष्टाः अथोच्यते विसंस्थिते सवने पूर्वया द्वारा सञ्चर इत्युक्तं न चात्र सवनं समाप्यते तद्यथापरयेति न ब्रूयात् विसंस्थिते सञ्चरेण निर्गमनं स्यात् एवं माभूदित्यत आह अपरयेति यथेतमिति चोक्ते ते पिण्डं पितृयज्ञं कृत्वा पूर्वया द्वारा प्रविष्टाः तत्रैषोऽपि सञ्चरो गम्येतापरयेत्यनुच्यमाने ॥ ६ ॥

सुभूरसीत्यादित्यमुपतिष्ठेरन्* ॥ ७ ॥

सुभूरसीत्यनेन यजुषा आदित्यमुपतिष्ठेरन् ॥ ७ ॥

अस्तमितश्चेद्गार्हपत्यम्* ॥ ८ ॥

यद्यस्तमितः स्यादादित्यः ततोऽनेन यजुषा गार्हपत्यमुपतिष्ठेरन् सोऽस्य विषयः षोडशीवाजपेयौ अन्यस्मिंश्च कालातिक्रमे ॥ ८ ॥

---

* द्राह्यायणेऽप्येवम्।

आग्नीध्रीये द्वे आहुती जुहुयुरपां पुष्पमिति पूर्वां स्वाहाकारेणोत्तराम्* ॥ ९ ॥

आग्नीध्रीयेऽग्नौ द्वे आहुती जुहुयुर्गत्वानुपूर्व्येण अपां पुष्पमित्यनेन यजुषा पूर्वामाहुतिं जुहुयात् स्वाहाकारेणोत्तरां अथाहुती इति द्विवचनेन सिद्धे किमिदं संख्याग्रहणं द्वे इति उच्यते नियमार्थम् उक्तं ह्यनेन हिरण्यमप्योयो भोगाद्दागच्छेद्धोतुमर्थामाक्षेपयेदाग्नीध्रीये वा जुहुयादिति तस्य हिरण्यस्यायं होमकालः यावै द्वितीया आहुतिस्तस्यामेव हिरण्यं प्रक्षिप्य जुहुयादिति ॥ ९ ॥

हारियोजन्यो नाम धाना द्रोणकलशे भवन्ति तासामुद्गाता प्रथम आददानः समुपहूता भक्षयिष्याम इति ब्रूयात्* ॥ १० ॥

हारियोजन्य इति संज्ञा धानानां द्रोणकलशे ताः स्थापिता भवन्त्यध्वर्युभिः सोममिश्राः तासां धानानामवयवमुद्गाता आददानः समुपहूता भक्षयिष्याम इति ब्रूयात् आदानं ग्रहणम् ॥ १० ॥

तथेतरौ* ॥ ११ ॥

तथेतरौ यथोद्गाता कुर्यात् तेनैव विधिनेतरौ प्रष्टी कुर्याताम् ॥ ११ ॥

---

* आह्यायणोऽप्येवम् ।

उन्नेतर्युपहवमिष्ट्वा हारियोजनस्य त इति तिरोऽह्न्येऽत्यतिरात्रे यथाधीतं वा सर्वत्र द्विरूपप्राय पश्चादाहवनीयस्यान्तः परिधि निवपेयुः* ॥ १२ ॥

उन्नेतरि इत्यधिकरणसप्तमी उपहवमिष्ट्वा उपहवं याचित्वा हारियोजनस्य त इत्येतेन यजुषा यद्वक्ष्यते तत् कुर्य्युः तिरोऽह्न्येऽत्यतिरात्रे एतदधिकं कुर्य्युः यथाधीतं वा सर्वत्र अतिरात्रे चानतिरात्रे च द्विरुपप्राय आहवनीयस्य पश्चिमे प्रदेशे परिधीनामभ्यन्तरतो निवपेयुः नाग्नौ ॥ १२ ॥

अनुप्रहृतेषु भस्मान्ते* ॥ १३ ॥

यदि परिधयः अनुप्रहृताः प्रक्षिप्ता अग्नौ भवन्ति तदा भस्मान्ते समीपे निर्वपेयुः ॥ १३ ॥

अपउपस्पृश्याष्टावष्टौ शकलान्याहवनीये प्रहरेयुर्देवकृतस्येत्येतत्प्रभृतिभिरिकारान्तैः* ॥ १४ ॥

उपधानात् अनन्तरं अपः स्पृष्ट्वा एकैकः अष्टौ अष्टौ शकलानि आहवनीये प्रक्षिपेयुः देवकृतस्येत्येतत्प्रभृतिभिर्मन्त्रैः इकारान्तैरिति मन्त्रान्तज्ञापनार्थम् ॥ १४ ॥

---

* आश्वलायनेऽप्येवम्।

सकृदेव सर्वाण्युत्तमेनेति गौतमः* ॥ १५ ॥

सर्वान् मन्त्रानुक्त्वा सकृदेव सर्वाणि सकलानि उत्तमेन मन्त्रेण प्रक्षिपेयुरिति गौतमस्त्वाचार्य आह ॥ १५ ॥

अप्सु षोमानाम चमसास्तात्वाल देशेऽद्भिः पूर्णास्तेषु हरितानि तृणानि प्रास्तानि भवन्ति † ॥ १६ ॥

अप्सु षोमा इति संज्ञा ते अप्सु षोमाश्चमसास्तालसन्निकृष्टे देशे अद्भिः पूर्णा स्थापिता भवन्ति तेषु हरितानि तृणानि प्रास्तानि भवन्त्यध्वर्युभिः ॥ १६ ॥

ते स्वं चमसं पर्युपविश्याप्सु धीतेत्यवमृश्य जपेयुः* ॥१७॥

ते उद्गातारः स्वकीयचमससन्निधावुपविश्य दक्षिणेन पाणिना स्पृष्ट्वा अप्सु धीतेत्येतदादि यजुर्जपेयुः ॥ १७ ॥

मधुमन्तमिति पाणीनुपजिघ्रेरन्* ॥ १८ ॥

मधुमन्तमित्यनेन यजुषा पाणीनुपजिघ्रेरन् ॥ १८ ॥

समुद्रइत्युदञ्चञ्चमसं निनयेयुः* ॥ १९ ॥

---

* लाट्यायनोऽप्येवम् ।

† लाट्यायनेनैतेन सूत्रद्वयं कृतम् ।

अमदृभ्य इत्यनेन यजुषा उदङ्मुखं चमसं कृत्वा तत्स्था आपः नीचैः चमसैः भूमौ निनयेयुः॥ १९॥

कामेत्यभ्यात्ममावर्त्तयेयुः* ॥ २०॥

कामेत्यनेन यजुषा अभिमुखमात्मनः चमसमावर्त्तयेयुः॥ २०॥

ऊर्गित्युरःसु पाणीन्निदधीरन्* ॥ २१॥

ऊर्गित्यनेन यजुषा उरःसु पाणीन्निदधीरन् निधानं स्थापनम्॥२१॥

प्राणसोमेति मुख्यान् प्राणानभिमृशेरन्* ॥ २२॥

प्राणसोमेत्यनेन यजुषा मुख्यान् प्राणानभिमृशेरन् मुखे भवा मुख्याः प्राणा इन्द्रियाणि अक्षिणी नासिके कर्णाविति॥ २२॥

आग्नीध्रीयं गत्वा दधिभक्षं भक्षयेयुरसमुपहूय दधिक्राव्ण इति* ॥ २३॥

आग्नीध्रीयपरिश्रितं गत्वा दधिभक्षं भक्षयेयुरसमुपहूय दधिक्राव्ण इति अनया ऋचा असमुपहूयेति समुपह्वानपूर्वकाः सर्वे भक्षा विहिताः तदिह भूयस्त्वं गृहीत्वा प्रवर्त्तंते तस्य प्रतिषेधः असमुपहूयेति॥ २३॥

इति द्वितीयस्य एकादशी कण्डिका।

---

* आश्वलायनोऽप्येवम्।

अथ द्वादशी कण्डिका ।

अग्निष्टपतीत्यवभृथ साम* ॥ १ ॥

अग्निष्टपतीति स्तोभलिङ्गेन अवभृथसामादेशः उक्तो ग्रहणेन चेति ॥ १ ॥

तस्यावृद्यथा प्रथमस्य प्रवर्ग्यसाम्नः* ॥ २ ॥

तस्यावभृथसाम्न आवृद्विधिः यथा प्रथमस्य प्रवर्ग्यस्य साम्नः येन प्रकारेणेत्यर्थः प्रथमं प्रवर्ग्यसाम त्वग्नाविरित्येतत् अथ तस्येति किमर्थमिति चेत् उच्यते अवभृथसामान्तराण्युपदेक्ष्यन्ते अभिषेचनीयाय चिराचयोः तदर्थं तस्य ग्रहणम् ॥ २ ॥

सर्व ऋत्विजो निधनमुपेयुः* ॥ ३ ॥

तस्यावभृथसाम्नः सर्व ऋत्विजो निधनं ब्रूयुः सर्वग्रहणं यथा प्रथमस्य प्रवर्ग्यसाम्नः इत्युक्तं तस्मिंश्च घर्मोपयुक्तानां निधनोपपत्तिः तन्माभूदतः सर्वग्रहणं कथमिह सर्वेषामृत्विजां निधनोपपत्तिः स्यादिति ॥ ३ ॥

इष्टाहोत्रीयमभिषेचनीये* ॥ ४ ॥

---

* द्राह्यायणोऽप्येवम् ।

अभिषेचनीये क्रतौ दृढाश्चोचीयमवभृथसाम स्यात् ॥ ४ ॥

समस्येति वा* ॥ ५ ॥

समस्येति वावभृथसाम स्यादित्यभिषेचनीये दृढाश्चोचीयं वेति विकल्पयति ॥ ५ ॥

अश्वत्रिरात्रे नानावभृथान्यहानि* ॥ ६ ॥

उक्तमहीनेषु दधिभक्षान्तान्यहानि प्रागुदयनीयादतिरात्रादिति च अयमश्वत्रिरात्रे विशेषः नानावभृथान्यहानीति नाना पृथगित्यर्थः ॥ ६ ॥

तेषां प्रथमस्य सनादग्न इत्यवभृथसाम* ॥ ७ ॥

तेषामाश्वमेधिकानामह्नां प्रथमस्याह्नः सनादग्न इत्येतदवभृथसाम स्यात् अवभृथसामग्रहणं तत्र साममात्रं न स्तोत्रोऽवभृथ इति ॥ ७ ॥

यद्वा उ विश्पतिरिति द्वितीयस्य त्वमग्ने यज्ञानामिति वा* ॥ ८ ॥

यद्वा उ विश्पतिरित्येतत् साम द्वितीयस्याह्नोऽवभृथसामेति प्रकृतं त्वमग्ने यज्ञानामिति वा विकल्पः तृतीयस्य सिद्धं प्राकृतम् ॥ ८ ॥

---

* द्राह्यायणोऽप्येवम् ।

अवभृथेऽष्टौ संस्थितायामवभृथनिचुं पुणनिचेरुरसि निचुं पुणावदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतं पुरुराव्णो देव-रिषस्पाहीत्यप उपस्पृश्य त्रिरभ्युत्तेरन्* ॥ ९ ॥

अवभृथेष्टौ समाप्तायां अवभृथनिचुं पुणेत्येतदादिना यजुषा या-स्यावभृथेष्टिं कुर्वन्ति ताः स्पृष्ट्वा स्नात्वा त्रिरभ्युत्तेरन् क्रियाभ्यावे मन्त्राभ्यास इत्युक्तम् ॥ ९ ॥

आदित्यमुपतिष्ठेरन्नुद्वयन्तमसस्परिज्योतिः पश्यन्त उ-त्तरं स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्त-ममिति* ॥ १० ॥

अभ्युत्तरणानन्तरं आदित्यमुपतिष्ठेरन् उद्वयन्तमसस्परीत्येतदा-दिना मन्त्रेण ॥ १० ॥

अस्तमितश्चेदाहवनीयम्* ॥ ११ ॥

यद्यस्तमित आदित्यः स्यात् तदाहवनीयमुपतिष्ठेरन् उद्वयन्तम-सस्परीत्येतयर्चा विशेष उक्तः प्रागेव अस्तमितश्चेद्गार्हपत्यमित्ये-तस्मिन् ॥ ११ ॥

तस्मिन् समिध आदध्युरेधोऽस्येधिषीमहीति प्रथमाᳬ समिदसि समेधिषीमहीति द्वितीयां यदेनश्चकृमावयं

---

* द्राह्यायणोऽप्येवम् ।

यदान्य कृतमारिमानया समिधा वयं सर्वन्तद्पमृज्य च इति तृतीयाम्* ॥ १२ ॥

तस्मिन्नाहवनीये सर्वे समिधमादध्युः आधानं प्रक्षेपः एधोस्येधिषीमहीत्येतदादिभिर्यथोद्दिष्टैर्मन्त्रैः अथ तस्मिन्निति किमर्थमिति चेत् यदास्तमितस्येदाहवनीयमित्यधिकृत एवाहवनीयः अत्रोच्यते उपस्थिते चानुपस्थिते च तस्मिन्समिधमादध्युरेव अन्यथा तस्योपस्थाने सति समिदाधानं स्यात्॥ १२ ॥

तमेवोपतिष्ठेरन्नपो अद्यान्वचारिषं रसेन समगस्महि पयस्वानग्न आगमन्तं मा संसृज वर्चसेति* ॥ १३ ॥

तमेवाहवनीयमुपतिष्ठेरन् अपो अद्यान्वचारिषमित्येतदादिना मन्त्रेण अपृथग्भ्रेण सोममुपचरति सोममिष्ट्वा भवयन्ति तमेवेति प्रकृतावधारणम् आदित्यस्य समुपस्थानमुक्तम् अतः तमेवाहवनीयमित्यवधारयन्ति ॥ १३ ॥

प्रागुदयनीयादतिरात्रादप्सु षोमान्तमक्षः सत्रेषु* ॥१४॥

सत्रेषु उदयनीयादतिरात्रात्पूर्वाणि यान्यहानि तेषु दधिभक्षादिकर्मशेषो न भवति ॥ १४ ॥

दधिभक्षान्तमहीनेषु* ॥ १५ ॥

---

* माध्यायनोऽप्येवम्।

अहीनेषु दधिभक्षाणामन्यहानि भवन्ति प्रागुदयनीयादहति-रात्रादिति वर्त्तते ॥ १५ ॥

यावन्त्यहानि राजानं भक्षयेयुस्तावत् स्वब्राह्मणयोच्छिष्टं न दद्युरग्निर्वा प्रोक्ष्य दद्युः* ॥ १६ ॥

यावन्त्यहानि राजानं सोमं भक्षयेयुः ऋत्विजस्तावत् स्वब्राह्मणयोच्छिष्टं न दद्युः अग्निर्वा प्रोक्ष्य छादनं कृत्वा दद्युः किमिदम् उच्यते, श्रुत्यन्तरेषु दृष्टं राजन्यवैश्ययोः सोमभक्षाभावो भक्षविशेषा-म्नानादिति एवं विधिं सूत्रकारः प्रकारान्तरेण दर्शयामास ॥ १६ ॥

तदेष श्लोकः सोममेतत् पिबत यत् किञ्चाश्नीत ब्राह्मणा मा ब्राह्मणायोच्छिष्टं दातमायात् सोममसोमप इति † ॥१७॥

तदेष श्लोक इति एतमेवार्थमनुवदति सोममेतत् पिबतेत्येतदा-दिना श्लोकेन ॥ १७ ॥

एतं परिक्रमꣳ सर्वक्रतुषु विद्यात् सर्वक्रतुषु विद्यात् ¶ ॥१८॥

योऽयं मन्त्रविधिस्वादिग्रहणेनेत्येतदादिविधिः परिक्रान्त एतं

* शाङ्खायनेनैतेन सूत्रद्वयं कृतम् ।

† शाङ्खायनेऽप्येवम् ।

¶ शाङ्खायनेऽप्येवं किन्तु तस्य मध्ये एतस्मादुत्तरे अतिरिक्तं सूत्रद्वयं वर्त्तते ।

सर्वक्रतुषु आनीयात्, ननु उक्तः सर्वक्रत्वधिकार इति तत् किमिदं पुन-
रुच्यते सर्वक्रतुषु विद्यादिति उच्यते अन्तप्रज्ञापनार्थं कथं अथ
विध्यव्यपदेशे सर्वक्रत्वधिकार इति एतदादिर्विधेरयमन्त इति एतं
सर्वक्रतुषु विद्यादिति अपर आह, सर्वक्रतोरधिकारः सर्वक्रत्वधिकार
इति सर्वक्रतुः ज्योतिष्टोमः कुतः श्रुतेः एष वा प्रथमो यज्ञानामि-
त्युक्ताह यथा वा इदमग्नेर्जातादग्नयो विक्रियन्त एवमेतस्माद्यन्ये
यज्ञा विक्रियन्त इत्युक्ताह यो हि विद्वदन्यं यज्ञक्रतुमापद्यते स तन्दी-
पयतीत्येतदाद्युक्ताह एतद्यदाऽऽरेको यज्ञ इत्येतद्धि सर्वे ज्योतिष्टोमा
भवन्तीति एतद्विधानमापद्यमानाः सर्वे ज्योतिष्टोमा भवन्तीति
सर्वक्रतुषु ज्योतिष्टोमः तदादावेव सर्वक्रत्वधिकार इति ज्योतिष्टोमा-
धिकारः तेषां पुनरुक्तदोषो नास्ति एवं ज्योतिष्टोमविधिं सर्वक्रतुषु
विद्यात् अधिकविधेस्तु प्रत्याहारं कुर्यात् ॥ १८ ॥

इति द्वितीयस्य द्वादशी कण्डिका ।

इति द्वितीयः प्रपाठकः समाप्तः।

## तृतीयः प्रपाठकः ।



### अथ प्रथमा कण्डिका ।

षोड़शिसाम्ना स्तोष्यमाणो यथासनमुपविश्य हविर्द्धानं गत्वा षोड़शिग्रहमवेक्षेतोद्गाता यस्मादन्य इति* ॥ १ ॥

उक्तं सार्वक्रतुकं सामान्यविधानं साम्प्रतं षोड़शिनो गुणविधानमुच्यते सार्वक्रतुकोऽयं षोड़शी द्विरात्रिके चतुर्थेऽहन्युत्पन्नः अत्रैव चास्य हिरण्यं सम्प्रदानं षोड़शिना स्तुवतइत्येवमादयो धर्माः पठिताः तेषां विधानं विवक्षुराह षोड़शिसाम्ना स्तोष्यमाण इति, ननु उक्तं त्वया चतुर्थेऽहनि षोड़शी उत्पन्न इति तत् प्रकरणे चैव धर्मा वक्तव्याः स्युः तत् किमिदं विप्रकरणे गुणविधानम् आरभ्यत इति यदा च तस्मिन्नेव प्रकरणे यस्मादन्यो न परो अस्ति जात इत्येतदादि मन्त्रं विधायोक्तम् उद्गाता ग्रहमवेक्षेत इति इदञ्चावेक्षणविधानं किमर्थमिति चेत् अत्रोच्यते तदिदम् अवेक्षणं प्रकरणे स्तोत्रान्ते उक्तं तत्रायं संशयः किं कालं प्रति तावत् किं तस्मिन्नेव कालेऽवेक्षणमथान्यस्मिन्निति तथा किं हविर्द्धानस्थस्यैव अथावेक्षणप्रवृत्तिः सदसीति अवेक्षणं हि सदसि प्रवृत्तं सोमानां सौम्यस्य च तथा एते धर्मा हिरण्यसम्प्रदानादयः चतुर्थोत्पादाः अथच षोड़शी प्रकरणान्तरेष्वपि श्रूयते

---

* आम्नाययोऽप्येवम् ।

सर्वसोमातिरात्रादिषु तत् किमेते धर्माः प्रकरणस्य भवन्ति उत प्रकरणान्तरेष्वपि षोडशिनं भजतइति कुतः पुनरयं संशयः उच्यते, अप्राकृतत्वात् षोडशिनः तेन किं प्राकृतो हि विधिर्विकृतीर्भजत अप्राकृतस्तु न वचनाद्विकृतीर्भजत इति अतोऽयमाचार्यं एता-ञ्शङ्कान् परिजिहीर्षुः सार्वक्रतुकानन्तरं षोडशिनो विधानमारभते कथम् एतं सार्वक्रतुकं विधानं षोडशिनः स्यादिति यदि ह्येतं विधान-माचार्यः प्रकरण आम्नायस्य तद्विषयमेवाभविष्यत् तन्माभूदतो विप्र-करण आरम्भः षोडशिसाम्ना स्तोष्यमाणः यथासनमुपविश्य हविर्धानं गत्वा षोडशिग्रहमवेक्षेत उद्गाता यस्मादन्य इति एष पदानां विच्छेदः अर्थो वक्ष्यते षोडशिसाम्नेति कर्त्तृकरणलक्षणा तृतीया स्तोष्यमाण इति भविष्यत्कालोपदेशः यथासनमुपविश्य संस्थायासने निःसृप्य समस्तोपस्थानं कृत्वा कृत्स्नेन वा अकृत्वा वा स्वस्मिन्नासन उपविश्य हविर्धानं गत्वा षोडशिग्रहमवेक्षेत उद्गाता यस्मादन्य इत्यनेन मन्त्रेण, ननु षोडशिसाम्नेति सामग्रहणं किमर्थं यदायं षोडशिशब्दः कृतेऽपि सामग्रहणात् स्तोत्रवाची भविष्यत्येव अयं हि षोडशिशब्दः त्रिषु वर्त्तते स्तोत्रे ग्रहे संस्थायामिति स्तोत्रे तावत् योगाय चीषु द्विपदासु इष्टता षोडशिना स्तुत इति ग्रहे प्रातःसवने षोडशिनं गृहीतं तृतीयसवने प्रजनयतीति स्वआयतने षोडशी गृह्यतइति च संस्थायां सोऽब्रवीत् षोडशी तेऽयं यज्ञक्रतुरस्त्विति सोऽयं षोडशिशब्दः प्रयु-ज्यमान स्तोत्रग्रहसंस्थासु इत्यर्थात् प्रतीयते तदिह षोडशिना स्तोष्यमाण इत्युक्ते कृतेऽपि सामग्रहणात् सवनसामर्थ्यात् साम्नेति गम्यतएव तत् किमिदं सामग्रहणमिति अत्रोच्यते यस्य षोडशिन

उक्थानन्तरविधानं तस्मिन्नेव क्रमे धर्माः प्राप्नुवन्ति इदञ्च षोड़शी-सामसंस्थान्तरेऽपि प्रयुज्यते तदस्यान्यस्मिन् स्थाने प्रयुज्यमानस्य धर्मा भवन्ति उत नेत्येव संशयः सोऽयमाचार्यः सामग्रहणं करोति कथं स्थानान्तरेऽपि प्रयुज्यमानस्य धर्मा भवेयुरिति क्व पुनरस्य स्थानान्तरे प्रयोगः अत्यग्निष्टोमे षोड़शिनं गृह्णीयादिति ॥१॥

एवमेव प्रातःसवने* ॥ २ ॥

योऽयं षोड़शिग्रहस्यावेक्षणे विधिरुक्तः षोड़शिसाम्ना स्तोष्यमाण इत्येतदादि तेनैव प्रातःसवनेऽप्यवेक्षेत यदि प्रातःसवनेऽपि गृह्णीत प्रातःसवने षोड़शिनं गृह्णीतान्तं तृतीयसवने प्रजनयति ॥ २ ॥

यदि चोत्तरयोरपि गृह्णीयुः* ॥ ३ ॥

यद्युत्तरयोरपि सवनयोर्गृह्णीयुः तयोरप्यनेनैव प्रकारेणा-वेक्षेत ॥ ३ ॥

अश्वः कृष्णः पूर्वस्यां सदसो द्वारि प्रत्यङ्मुखस्तिष्ठेदिति धानञ्जप्यः* ॥ ४ ॥

उक्तः अश्वः कृष्ण उपतिष्ठति साम्नेत्यत्राथे तस्य स्थाननिर्देशः क्रियते अश्व इति प्रतीतपदार्थकः शब्दः कृष्ण इति वर्णनिर्देशः पूर्वस्यां सदसो द्वारि प्रत्यङ्मुखस्तिष्ठेदिति धानञ्जप्यः आचार्य आह ॥ ४ ॥

---

* द्राह्यायणोऽप्येवम् ।

अपरस्यां प्राङ्मुख इति शाण्डिल्यः* ॥ ५ ॥

अपरस्यां सदसो द्वारि प्राङ्मुखोऽवतिष्ठेदेवं शाण्डिल्य आचार्य आह ॥ ५ ॥

कृष्णाभावे श्यावः* ॥ ६ ॥

कृष्णस्याजस्याभावे श्यावः स्यात् श्याव इत्यनिरुक्तो वर्णः न कृष्णो न श्वेतः तयोरन्तरेण वर्त्तते ॥ ६ ॥

तदभावे यः कश्चाजः* ॥ ७ ॥

तस्याभावः तदभावः तदिति पूर्वनिर्देशः तस्य श्यावाजस्याभावे यः कश्चाजः स्यात् अथ यः कश्च इति सिद्धे किं पुनरजग्रहणमधिकं क्रियतेऽस्य इति उच्यते, अन्यथाप्यभावे यः कश्चाजः स्यात् यथा तस्मा अमुमादित्यमजं श्वेतं कृत्वा दक्षिणामानयन्निति तथा अजश्यावो दक्षिणा सन्निरुक्तः समन्त्रणो देय इति तत्रापि श्वेतश्यावयोरभावे यः कश्चाजः स्यात् ॥ ७ ॥

गौर्वाजोवान्याभावे* ॥ ८ ॥

अजयो न स्यात् गौर्वाजो वा भवेत् अजेत्यग्रहणं पुनः किमर्थम् उच्यते, तदभावे यः कश्चाज इत्युक्तं श्वेतश्यावयोरप्यभावे यत्र-

* द्राह्यायणेऽप्येवम्।

त्रोपहव्ययोः यः कल्पश्च इति तयोरपि गौर्वाञ्जो वास्वाभाव इति प्राप्नोति तन्निवृत्त्यर्थमव्ययहणं करोति, कथं, षोडशिन्येव गौर्वाञ्जो वास्वाभावे भवेत् न तथातयोरपीति ॥ ८ ॥

योयः सामाङ्गं ब्रूयात् स हिरण्यं धारयेत्* ॥ ९ ॥

उक्तं हिरण्यसम्प्रदानं षोडशिना स्तुवत इति तद्विवेकार्थमाह, यो यः षोडशिसाम्नः अङ्गं ब्रूयात् स स हिरण्यं धारयेत् स्वस्यां स्वस्यां भक्तौ ॥ ९ ॥

उद्गाता निधनमुपयन्तु* ॥ १० ॥

उद्गाता निधनं ब्रुवन्तु तं हिरण्यं धारयेत् ॥ १० ॥

सर्वे वाभिम्नृग्येयुः* ॥ ११ ॥

सर्वे वा हिरण्यमभिम्नृग्येयुर्निधनमुपयन्तः ॥ ११ ॥

अवसर्पति प्रथमं पर्यायं गायेच्छन्नम्* ॥ १२ ॥

अवसर्पत्यादित्ये षोडशिसाम्नः प्रथमं पर्य्यायं गायेत् छन्नम् अप्रकाशम् अव अधोभावे स्रगतौ ननु कथमेतद्गम्यते यथा अवसर्पत्यादित्यइति उच्यते उपरिष्टाद्वक्ष्यत्यस्तमिते तृतीयमाविरिति ॥ १२ ॥

---

* आह्वायबोऽप्येवम्।

विषिते द्वितीयमाध्येन* ॥ १३ ॥

विमते षिते विषिते विगते शृङ्गे वर्षे द्वितीयं पर्यायं गायेन्मध्य-मेन स्वरेण ॥ १३ ॥

अस्तमिते तृतीयमाविः* ॥ १४ ॥

अस्तङ्गते आदित्ये तृतीयं पर्यायं गायेत् प्रकाशम् ॥ १४ ॥

यदोपाकुर्युस्तुवीरन्नेव † ॥ १५ ॥

इह प्रथमं कालनियमः कृतः अवसर्पति प्रथमं पर्यायमित्ये-तदादि सोऽयं विकल्पयति यदा यस्मिन् काले उपाकुर्युरध्वर्यवः तस्मिन्नेव काले स्तुवीरन् न स्वं कालमाद्रियेरन् अपरे विनिवेशं वर्णयन्ति सन्धिकाले षोडशिनि अत्यग्निष्टोमेऽहनि अतिरात्रे रात्रा-विति, अपरे ब्रुवते विचारितं, किमर्थमिदम् षोडशिन उद्गातुरिति उच्यते अत्राचार्य्याणामुभयथा प्रतिपत्तिः येषामहरन्ते तेषामह-न्युपाकरणं येषां रात्रौ तेषां रात्राविति अतोऽयमाचार्य्य आर-भते यदोपाकुर्युः तदा अप्रकाशं स्तुवीरन्नेवेति अथ तत्र कः स्वर इत्युच्यते ॥ १५ ॥

अहनि क्रुष्टं रात्रावाविः † ॥ १६ ॥

---

* आज्ञायवेऽप्येवम्।

† आज्ञायवेन स्थमद्वयेनैकत्र' ज्ञातम्।

यदाहन्युपाकुर्युः तदा आकाशं कुर्वीरन् रात्रौ प्रकाशम् ॥१६॥

उद्गात्रे दद्यादश्वहिरण्ये दक्षिणावत्सु* ॥ १७ ॥

उद्गात्रे दद्याद् यजमानः अश्वहिरण्ये अश्वञ्च हिरण्यञ्च अश्वहिरण्ये दक्षिणावत्सु यज्ञेषु अथ दक्षिणावत्स्विति किमर्थम् अदक्षिणेषु दानप्रसङ्ग एव नास्ति उच्यते, पश्वत्ययं सर्वेष्वप्यदक्षिणाप्रसङ्गं तेन सत्यप्यङ्गदक्षिणाप्रसङ्गे सर्वेषु षोडशिन्यश्वहिरण्ये निवर्त्तयति ॥१७॥

सत्र एव ग्रहस्य भक्षयेयुरैन्द्र०सह इत्युदस्य हरिवद्धरिकासु चेत् कुर्वीरन् † ॥ १८ ॥

षोडशिग्रहस्य सत्र एव भक्षयेयुः नैकाहाहीनेषु ऐन्द्र० सह इत्यनेन मन्त्रेण उदस्य हरिवद्धरिकासु कुर्वीरन् योऽस्मिन् कर्म्मणि हरिवाहन्दः तम् उत्क्षिप्य उद्धृत्य यद्धरिकासु चेत् षोडशिनं कुर्वीरन् अथ पुनः हरिवतीषु कुर्वीरन् नैव हरिवच्छन्दमुद्धरेयुः हरिवत् कृतेन मन्त्रं प्रयुञ्जीरन् सर्वेकाभ्यः किमर्थं सत्र एवेति उच्यते, न केवलं षोडशिग्रहस्य अन्ये ये ग्रहास्तेषामपि च सत्र एव भक्षयेयुः नैकाहाहीनेषु एतस्मान्यतरस्मिन् क्रतौ नियामानां द्रव्याणां भक्षयेयुरित्येतदाहिना ॥ १८ ॥

---

* द्राह्यायणेऽप्येवम् ।

† द्राह्यायणेनैतेन सूत्रद्वयं व्याख्यातम् ।

अनुष्टुप्छन्दसा चमसस्य* ॥ १९ ॥

योऽनुष्टुप्छन्दसा इति स्तोत्रे यस्मिन् चमसः तस्यानुष्टुप् छन्दसा भक्षयेयुः ॥१९॥

पूर्वेण वा* ॥ २० ॥

मन्त्रेण चमसस्य भक्षयेयुः ऐन्द्रं वह इन्द्रेणेन उदरस्य हरिवद्-हरिकासु सुवीरमित्यनुवर्त्यतएव ॥ २० ॥

तथा कुर्वन्निन्द्रस्य सखा वृत्रघ्नस्य राजा तौ ते भक्षं चक्रतुरग्र एतं तयोरहमनुभक्षं भक्षयामि वाग्जुषाणा सोमस्य तृप्यन्त्विति ग्रहस्य* ॥ २१ ॥

तथा कुर्वन् पूर्वेण मन्त्रेण चमसस्य भक्षणम् इन्द्रस्य सखा वृत्रघ्नस्य राजेत्येतदादिना यथाम्नातेन मन्त्रेण ग्रहस्य भक्षयेयुः ॥ २१ ॥

इन्द्रमिद्धरीति वा वाग्देवी सोमस्य पिबत्वित्येतदधिकया* ॥ २२ ॥

इन्द्रमिद्धरिवदित्येतयर्चा वाग्देवी सोमस्य पिबत्वित्येतदधिकया भक्षयेदिति विकल्पः ॥ २२ ॥

---

* आश्वलायनेऽप्येवम् ।

ऐन्द्रः सह इति चमसस्य सवे त्रिष्टुप्छन्दसा वाजपेयसाम्नि भक्षयेदिति गौतमः* ॥ २३ ॥

वाजपेयसाम्नि त्रिष्टुप् छन्दसा इत्येव छन्द आदेशं कृत्वा भक्षयेदिति गौतम आचार्य्य आह तच्छन्दस्त्वात् सोमस्य ॥ २३ ॥

अनुष्टुप्छन्दसेति धानञ्जप्यशाण्डिल्यौ † ॥ २४ ॥

अनुष्टुप्छन्दसा वाजपेयसाम्नि भक्षयेदिति धानञ्जप्यशाण्डिल्यावाचार्य्यावाहतुः यदूर्द्धमुक्थेभ्यः अनुष्टुभः सभाग इति अनुष्टुप् छन्दसा रात्रौ ॥ २४ ॥

अनुष्टुपच्छन्दसा रात्रौ † ॥ २५ ॥

न भक्षयेयुः अनुष्टुभत्वात् रात्रेः ॥ २५ ॥

पृथक् तृचेभ्यः सन्धौ हिं कुर्युः † ॥ २६ ॥

पृथक्त्वानेत्यर्थः नानातृचेभ्यः सन्धौ हिंकुर्युः नानादैवत्यत्वात्तृचानाम् ॥ २६ ॥

इष्ट यजुष इति भक्ष्यः † ॥ २७ ॥

---

* आह्वायणेनैतेन सूत्रद्वयं कृतम् ।

† आह्वायणोऽप्येवम् ।

दृष्टचक्षुष इत्यनेन चक्षुषा मन्त्रो भक्षः ॥ २७ ॥

गायत्रच्छन्दसातिरिक्तस्तोत्रेष्विति गौतमः* ॥ २८ ॥

अतिरिक्तस्तोत्रेषु गायत्रच्छन्दसा भक्षणमिति एवं गौतम आचार्यो मन्यते समाप्तेषु भक्षच्छन्दःसु पुनरुपक्रमे कोऽन्यो गायत्रात् स्यादिति ॥ २८ ॥

पृथग्भक्षच्छन्दोभिरनुपूर्वमिति धानञ्जप्यशाण्डिल्यौ* ॥२९॥

यानि चत्वारि भक्षच्छन्दांसि तैः पृथक् पृथक् आनुपूर्व्येण चतुर्ष्वन्तेषु तदानुपूर्व्येण भक्षयेयुरिति धानञ्जप्यशाण्डिल्यावाचार्यावाहतुः सम्भवाच सर्वेषां भक्षच्छन्दसाम् अर्थाच, कोऽर्थः अग्न्यादीनां देवतानाञ्च छन्दोभावात् ॥ २९ ॥

अनुष्टुप्छन्दसा वा* ॥ ३० ॥

मन्त्रेण भक्षयेयुः अनुष्टुप्भागनिमित्तत्वात् यदूर्द्ध्वमुक्थेभ्यः अनुष्टुभः सभाग इति ॥ ३० ॥

अच्छन्दसा वा* ॥ ३१ ॥

अच्छन्दसा वा मन्त्रेण भक्षयेयुः उपयुक्तत्वात् भक्षच्छन्दसाम् ॥३१॥

---

* माशायनोऽप्येवम्।

सन्धिवद्वा* ॥ ३१ ॥

यथा वा सन्धौ तथा वा भक्षयेयुः प्रकृतत्वात् मन्त्रस्य चानुप- देशाद्वान्येषाम् ॥ ३१ ॥

इति तृतीयस्य प्रथमा कण्डिका ।

---

अथ द्वितीया कण्डिका ।

आहिताग्निरसोमयाजी परं सोमेन याजयित्वा परि- भक्षं कुर्वीत* ॥ १ ॥

उक्ताः षोडशिनो धर्माः सोमस्य च भक्षविधानमुक्तं चात्र्यति- रिक्तस्तोमाप्नोतीति साम्प्रतमुपरि भक्षविधानमुच्यते आहिताग्निः आ- हिता अग्नयो येन स आहिताग्निः असोमयाजी येन सोमेन इष्टं स सोमयाजी न सोमयाजी असोमयाजी परम् अन्यं सोमेन याज- यित्वा अपरिभक्षं कुर्वीत अपरिभक्ष इति कर्मणः संज्ञा परस्याग्निषु येन सोमो भक्षितः तेन स्वाग्नयः परिभक्षिताः पितरश्च तदपरि- भक्षार्थमिदं कर्मारभ्यते ननु आहिताग्निग्रहणं किमर्थमिति चरा

---

* आश्वलायनेऽप्येवम् ।

अवक्ष्यदसोमयाजीति वक्ष्यमाणाहिताग्नेः सोमयागः स्यात् अन्यार्थेन वाहिताग्नित्वं विज्ञायते इह गार्हपत्यदक्षिणाग्न्याहवनीयेषु आज्याधिश्रयणद्रव्यानिधानाज्यग्रहणान्यादेष्यन्ते हुतायां प्रातराहुतावाज्यं गार्हपत्येऽधिश्रित्योदगुद्वासयेत् कंसे चमसे वा द्रव्याणवधाय दक्षिणाग्नावुपसादयेत् स्फ्यदर्भमुष्टी च पश्चिमेन गार्हपत्यं गत्वा पश्चादाहवनीयस्योपविश्य स्रुवेण स्रुच्याज्यं गृह्णीयाद्यावद्गृहीती स्यादिति अस्य च कर्मणो नान्तरेणाहिताग्नेः प्रसिद्धिः तदेवमर्थादाहिताग्नित्वे सिद्धे यदुच्यते आहिताग्निरित्येतदनर्थकं तस्मादाहिताग्निग्रहणं न कर्त्तव्यं क्रियमाणे कारणं वक्तव्यम् उच्यते, यद्याहिताग्निग्रहणं न कुर्यात् अनाहिताग्नेर्याजनप्रसङ्गो न स्यात् सोऽयमाहिताग्निग्रहणं करोति आहिताग्निरसोमयाजी परं सोमेन याजयित्वा इत्यं कर्म कुर्यात् अनाहिताग्निर्याजयित्वापि परं न वेदं कुर्यात् यावता तस्याग्नयो नैव सन्ति येषामपरिभवार्थमेवेदं कर्म क्रियते अथासोमयाजीति किमर्थं यावता वक्ष्यति सोमयाज्यपीति शाण्डिल्य इति असोमयाजिग्रहणं कथमुच्यते अनिष्टप्रथमस्येदं कर्म स्यात् इति सोमयाजी हि अनाहिताग्निरपि भवति सत्रेषु तथाप्यसावसोमयाज्येव अथ परग्रहणं किमर्थं यदा याजयितृत्वं सिद्धमेतत् परमिति उच्यते, परग्रहणं परमेव याजयित्वा न पितरं वा पुत्रं वा भ्रातरं वेति निर्गुणः स्वजनः एभ्यो योऽन्यः परः पर एव सः ॥१॥

सोमयाज्यपीति शाण्डिल्यः* ॥ ७ ॥

---

* द्राह्यायणोऽप्येवम्।

सोमयाज्यप्येतत् कर्म कुर्य्यादिति शाण्डिल्यः आचार्य्य आह, साम्प्रतमस्याप्यरिभवस्य कर्मणः कर्त्तव्यतोच्यते ॥ २ ॥

हुतायां प्रातराहुतावाज्यं गार्हपत्येऽधिश्रित्योदगुद्वासयेत्* ॥ ३ ॥

हुतायां प्रातराहुतौ हुतेऽग्निहोत्रे आज्यं घृतं गार्हपत्याग्नावधिश्रित्य उदक् उद्वासयेत् ॥ ३ ॥

कंसे चमसे वा द्रप्सानवधाय दक्षिणाग्नावपसादयेत्* ॥ ४ ॥

कंसे वा भाजने दारवे वा चमसे दधिद्रप्सानवधाय दध्यवयवान् दक्षिणाग्नेः समीपे स्थापयेत् ॥ ४ ॥

स्फ्यदर्भमुष्टी च* ॥ ५ ॥

स्फ्यस्य दर्भमुष्टिश्च स्फ्यदर्भमुष्टी दक्षिणाग्नेः समीपे स्थापयेत् ॥५॥

पश्चिमेन गार्हपत्यं गत्वा पश्चादाहवनीयस्योपविश्य स्रुवेण स्रुच्याज्यं गृह्णीयाद्यावद्गृहीती स्यात्* ॥ ६ ॥

द्रप्सान् स्फ्यदर्भमुष्टी च स्थापयित्वा अनन्तरं पश्चिमेन प्रदेशेन

---

* द्राह्यायणेऽप्येवम् ।

गार्हपत्यस्य गत्वा आहवनीयस्य पश्चिमे प्रदेशे उपविश्य यत्तदाज्यं गार्हपत्येऽधिश्रित्योदगुद्वासितं तस्मात् स्रुवेण स्रुचि गृह्णीयात् यावद्गृहीती स्यात् यदि चतुर्गृहीती यदि पञ्चगृहीती ॥ ६ ॥

तज्जुहुयादिमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरमापिः पिता प्रमतिः सोम्यानां भृमिरस्यृषि कृन्मर्त्यानाᳪ स्वाहेति* ॥ ७ ॥

यदि चतुर्गृहीतं यदि पञ्चगृहीतं तज्जुहुयादिमामग्ने इत्येतदादिना यथासूचितेन मन्त्रेण ॥ ७ ॥

एवमेव गृहीत्वापां पुष्पमस्योषधीनाᳪ रसोग्नेः प्रियतमा तनूरिन्द्रस्य प्रियतमᳪ हविः स्वाहेति* ॥ ८ ॥

एवमेव गृहीत्वा यदि चतुर्गृहीतं यदि पञ्चगृहीतं अपां पुष्पमित्येतदादिना यथासूचितेन मन्त्रेण जुहुयात् ॥ ८ ॥

आज्यस्य पूर्वान् ग्रहान् गृहीत्वा दध्न उत्तमं विश्वेभ्यो देवेभ्यः स्वाहेति* ॥ ९ ॥

आज्यस्य पूर्वान् ग्रहान् गृहीत्व यदि चतुर्गृहीतं चैनाज्यस्य

---

* आश्वलायनेऽप्येवम् ।

गृहीत्वा इत्र उत्तमं यदि पञ्चगृहीतं चमार आज्यस्य गृहीत्वा इत्र उत्तमं विश्वेभ्यो देवेभ्यः स्वाहेति अनेन यजुषा जुहुयात् ॥ ९ ॥

दधिशेषꣳ स्रुच्यानीयोदङ्ङावृत्य प्राश्नीयात्तव सोम व्रते वयं मनस्तनूषु पिप्रतः प्रजावन्तो अशीमहीति* ॥ १० ॥

दध्नो गृहीतावदानस्य अवयवः स्यात् तं स्रुच्यानीय स्रुचि कृत्वोदङ्ङावृत्य प्राश्नीयात् तव सोम व्रते वयमित्येतदादिना यथासूचितेन मन्त्रेण ॥ १० ॥

प्रक्षाल्य स्रुचं यथेतं प्रत्याव्रज्य प्राचीनावीती भूत्वा दक्षिणा दक्षिणाग्नेः स्थण्डिलꣳ समुह्याद्भिः सम्प्रोक्ष्य स्फ्येन सकृदुल्लिख्योल्मुकमुपनिधाय दर्भानुपस्तीर्याप उपनिनीयामीषां द्रप्सानान्निपृणुयादवमेभ्यः पितृभ्यः स्वधा सह भक्षेभ्य इति प्रथमम्* ॥ ११ ॥

प्राश्य दधिशेषम् आचम्य प्रक्षाल्य स्रुचं अद्भिस्तत्पात्रं शोधयाग्नेः यथागतं प्रत्याव्रज्य दक्षिणाग्नेः समीपं प्राचीनावीतित्वमुक्तं गृह्ये एवं प्राचीनावीती भवतीति तत्कृत्वा दक्षिणाग्नेः दक्षिणे प्रदेशे स्थण्डिलं समुह्य शोधयित्वा अद्भिः सम्प्रोक्ष्य स्फ्येन सकृदुल्लिख्य उल्लेखनं कृत्वा उल्मुकं उपनिधाय उल्मुकं लेखायाः समीपे निधाय दर्भा-

---

* आश्वलायनोऽप्येवम्।

